ओं

श्रीगणेशाय नमः

अथ

# लल्लेश्वरीवाक्यानि

श्रीराजानकभास्कराचार्यसंदृब्धसंस्कृतपद्योपेतानि ।

नुत्वा देवं श्रीगणेशं सुरेशं
स्मृत्वा चित्ते श्रीगुरोः पादुकां च ।
लल्लादेवीप्रोदितं वाक्यजातं
पद्यैर्दृब्धं रच्यते भास्करेण ॥ १ ॥

अभ्यासि सविकास लय वुथू ,
गगनस् सगुण म्यूलु समिच्रूटा ।
शून्य् गलु त अनामय म्वतू,
इहुय् उपदेश छुय् भटा ॥ १ ॥

अभ्यासेन लयं नीते दृश्ये शून्यत्वमागते ।
सान्त्विरूपं शिष्यते तच्छान्ते शून्येऽप्यनामयम् ॥ १ ॥

वाक् मानस् क्वल अक्वल ना आति,
छ्वपि मुद्रि आति न प्रवेश् ।
रोज़न् शिव शक्त ना आति,
म्वतुयय् कुँह् त सुय् उपदेश् ॥ २ ॥

वाङ्मानसं च तन्मुद्रे शिवशक्ती कुलाकुले ।
यत्र सर्वमिदं लीनमुपदेशं परं तु तत् ॥ २ ॥

लल्ल् ब्वह् द्रायस् लो-लरे,
छाडान् लूस्तुम् दिन क्योह राथ् ।
वुछुम् पण्डित् पनानि-गरे,
सुय् म्य रट्मस् नच्तुर् साथ् ॥ ३ ॥

लल्लाहं निर्गता दूरमन्वेष्टुं शंकरं विभुम् ।
भ्रान्त्वा लब्धो मया स्वास्मिन्देहे देवो गृहे स्थितः ॥ ३ ॥

दमादम् कॅरमस् दमन्हाले,
प्रज़ल्योम् दीप् त ऩनेयम् ज़ाथ् ।
अन्दर्युम् प्रकाश् न्यबर् छ्वटुम्,
गटि रॅटुम् त कॅरमस् थफ् ॥ ४ ॥

ततः प्राणादिरोधेन प्रज्वाल्य ज्ञानदीपिकाम् ।
स्फुटं दृष्टो मया तत्र चित्स्वरूपो निरामयः ॥ ४ ॥

पर् त पान् य्‌मि समुय् मोन्,
य्‌मि हिहुय् मोन् दिन क्योह राथ् ।
य्‌मिसय् अदुयु मन् साम्पुन्,
त्‌मिय् ड्यूठुय् सुरगुरुनाथ् ॥ ५ ॥

आत्मा परो दिनं रात्रिर्यस्य सर्वमिदं समम्
भातमद्वैतमनसस्तेन दृष्टोऽमरेश्वरः ॥ ५ ॥

चिदानन्दस् ज्ञानप्रकाशस्,
इमौ च्यूनुय् तिम् जीवन्ती मुक्ती ।
विषमिस् संसारनिस् पाशस्,
अबुद्धव् गण्डशत् शत् दितिय् ॥ ६ ॥

चिदानन्दो ज्ञानरूपः प्रकाशाख्यो निरामयः ।
यैर्लब्धो देहवन्तोऽपि मुक्तास्तेऽन्येऽन्यथा स्थिताः ॥ ६ ॥

नाथ् ना पान् ना पर् -ज़ोनुम्,
सदायि बोदुम् एकुय् देह् ।
च्‌ह् ब्‌ह् ब्‌ह् च्‌ह् म्युलु ना ज़ोनुम्,
च्‌ह् कुस् ब्‌ह् कस्स छुह् संदेह् ॥ ७ ॥

नाथ न त्वं न चात्मापि ज्ञातो देहाभिमानतः ।
स्वस्यैक्यं च त्वया तेन का आवामिति संशयः ॥ ७ ॥

शिव् वा केशव् वा जिन् वा ,
कमलज़नाथ् नाम् दा॒रिन् युस् ।
म्य अबलि का॒सितन् भवरुज् ,
सुह् वा सुह् वा सुह् वा सुह् ॥ ८ ॥

शिवो वा केशवो वापि जिनो वा द्रुहिणोऽपि वा ।
संसाररोगेणाक्रान्तामबलां मां चिकित्सतु ॥ ८ ॥

भान् ग॒लु ता॒य् प्रकाश् आव् ज़ूने ,
चन्द्र ग॒लु ता॒य् म्वतू चित् ।
चित् ग॒लु ता॒य् कँह् ति ना कुने ,
गैय् भूर् भुवः स्वर् मीलिथ् कतु ॥ ६ ॥

भानौ नष्टे काशते चन्द्रबिम्बं
तस्मिन्नष्टे काशते चित्तमेव ।
चित्ते नष्टे दृश्यजातं क्षणेन
पृथ्व्यादीदं गच्छति क्वापि सर्वम् ॥ ६ ॥

वुथ् रैण्या अर्चुन् सखर्,
अथि अल् पल् वखुर् ह्यथ् ।
यदुवनय् ज्ञानख् परमपद्,
अक्षर् हिशीखर् छिशीखर् ह्यथ् ॥१०॥

उत्तिष्ठ शाक्तिकास्त्वं त्वं पूजयेशं सुरादिभिः ।
यदि ज्ञातमक्षरं तत्त्वया तेनापि का क्षतिः ॥ १० ॥

तन्त्र् गलि-ताय् मन्त्र् म्वचे,
मन्त्र् गलु ताय् म्वतुय् चित्त् ।
चित्त् गलु-ताय् केँह् ति ना कुने,
शून्यस् शून्याह् मीलिथ् गौव् ॥ ११ ॥

तन्त्रं सर्वं लीयते मन्त्र एव
मन्त्रश्चित्ते लीयते नादमूलः ।
चित्ते लीने लीयते सर्वमेव
दृश्यं द्रष्टा शिष्यते चित्स्वरूपः ॥ ११ ॥

ह्यथ् करिथ् राज्य् फेरि ना,
दिथ् करिथ् तृप्ति ना मन् ।
लोभ विना जीव् मरि ना,
जीवन्त् मरि-ताय् सुय् छुय् ज्ञान् ॥ १२ ॥

दातुर्मनस्तृप्यति नैव राज्यं
दत्त्वा ग्रहीतुश्च तदेव लब्ध्वा ।
जीवोऽपि लोभेन न मृत्युमेति
मृतस्य नैवास्ति न जातु मृत्युः ॥ १२ ॥

इमय् पद् च्य़ तिमय् पद् म्य,
श्यामगला च्य़ विन् तोठुस छुह्
इहुय् भिन्नाभेद् च्य़ त म्य,
च्रह् पन् स्वामी बुह् पॉयि मुषिस् ॥ १३ ॥

यदेव पदकं ते देव तदेव च मम प्रभो ।
नियोक्ता त्वं नियोज्याहं तस्यास्तीत्यावयोर्भिदा ॥१३॥

शिव् गुरु ताय् केशव् पलनस् ,
ब्रह्मा पायहर्यन् व्वलस्यस् ।
योगी योगकलि पर्जान्यस् ,
कुस् देव् अश्ववार् प्यठ् चड्यस् ॥ १४ ॥

शिवोऽश्वः केशवस्तस्य पर्याणमात्मभूस्तथा ।
पादयन्त्रं तत्र योग्यः सादी क इति मे वद ॥ १४ ॥

अनाहत खस्वरूप शून्यालय्,
यस् नाव् ना वर्ण ना रूप ना गोत्र् ।
अहंनिनाद बिन्द् त यवोन्,
सुय् अश्ववार् प्यट् चेड्यस् ॥ १५ ॥

अनाहतः खस्वरूपः शून्यस्थो विगतामयः ।
अनामरूपवर्णोऽजो नादबिन्द्वात्मकोऽस्ति सः ॥ १५ ॥

तूरि सलिल् खंटु तांय् तूरि
ह्यम्य त्रि गैय् भिन्ना भिन्न् विमर्शा ।
चैतन्य रव् भाति सव् समे,
शिवमय् चराचर् जग् पश्या ॥ १६ ॥

मायाजाड्यं तज्जडं बोधनीरं
संसृत्याख्यं तद्घनत्वं हिमं च ।
चित्सूर्येऽस्मिन् प्रोदिते त्रीणि सद्यो
जाड्यान्मुक्तं नीरमाद्यं शिवाख्यम् ॥ १६ ॥

देह वटा देवर वटा,
प्यठ ब्वन लुथ् एकवाट् ।
कस् करख् ह्यटबटा,
कर् मनस् त पवनस् संगाट् ॥ १७ ॥

चैत्यं देवो निर्मितौ द्वौ त्वया यौ
पूजाहेतोस्तौ शिलातो न भिन्नौ ।
देवोऽमेयश्चित्स्वरूपो विधेयं
तत्प्राप्त्यर्थं प्राणचित्तैक्यमेव ॥ १७ ॥

आसा बोल् पॅरिनम् सासा,
म्य मनि वासा खेद् ना ह्यये ।
यदुवय् शंकर बख्च् आसा,
मकुरिस् स्वासा मल् क्याह् प्यये ॥१८॥

अवाच्यानां सहस्राणि कथयन्तु न मन्मनः ।
मालिन्यमेत्युदासीनं रजोभिर्मकुरो यथा ॥ १८ ॥

अक्लान् आय् त गक्लन् गक्ले,
पकुन् गक्ले दिन क्याह् व राथ् ।
योरय् आय् तूरि गक्लन् गक्ले,
कैँह् न-त कैँह् न-त कैँह् न-त क्याह् १९

जराऽऽगता क्षीणतरोऽद्य देहो
जातोऽवसायो गमनाय कार्यः ।
समागताः स्मो यत एव तत्र
गन्तव्यमेवेह दृढं न किञ्चित् ॥ १९ ॥

मूढव् दीशिथ् त पाशिथ् लाग् ,
  जरु त कलु श्रुतवोन् ज़डरूपि आस् ।
युस् यियि् दपियि् तस् तिथु वोलु,
  सुय् छुय् तत्त्वविदस् अभ्यास् ॥२०॥

ज्ञात्वा सर्वं मूढवत्तिष्ठ स्वस्थः
  श्रुत्वा सर्वं श्रोत्रहीनेन भाव्यम् ।
दृष्ट्वा सर्वं तूर्णमन्धत्वमेहि
  तत्त्वाभ्यासः कीर्तितोऽयं बुधेन्द्रैः ॥ २० ॥

गाल् गांडिन्यम् बोल् पंडिन्यम् ,
  दांपिन्यम् तिह् यस् यिथु रोच़े ।
सहजकुसुमव् पूज़् कांरिन्यम् ,
  बुह् अमलांस् कस् क्याह् म्वचे ॥ २१ ॥

निन्दन्तु वा मामथ वा स्तुवन्तु
  कुर्वन्तु वार्चां विविधैः सुपुष्पैः ।
न हर्षमायाम्यथ वा विषादं
  विशुद्धबोधामृतपानस्वस्था ॥ २१ ॥

दिन् छ्यजि त रज़न् आसे,
भूतल् गगनस् कुन् विकासे ।
चन्द्रि राह् ग्रोसुन् मावासि,
शिव् पूज़न् ग्वाह् चित्त आत्मासि ॥२२॥

नाशं गतेऽर्के खलु मानसंज्ञे
मेयत्त्रयाख्या रजनी विभाति ।
जीवाख्यचन्द्रः शिवधाम्नि लीनः
स्वाहन्त्वराहुं ग्रसते च सद्यः ॥ २२ ॥

मनस् त भवसरस् छु त ,
कोप निरता नार-छ्वख् ।
ल्यक लज़िताय् वुह् ना कुने,
तुलि तुल् ताय् तूलु ना केँह ॥ २३ ॥

क्रुद्धं मनो वह्निसमानरूपं
तिरस्कृतं भारनतं विभाति ।
विचारतः सर्वविकारहीनं
विशुद्धबोधैकस्वरूपमेव ॥ २३ ॥

शील् त मान् छुय् पाञ्ज़ि कञ्जय,
म्वछि यमि रटु मलयुद्ध वाव्
हस्तु युस् मस्तवाल गँडे,
तिह् यस् तागि सुह् अद न्यहाल् ॥ २४ ॥

शीलस्य मानस्य च रक्षणं भटै-
स्तैरेव शक्यं निपुणं विधातुम् ।
वायुं करेणाथ गजं च तन्तुना
यैः शक्यते स्तम्भयितुं सुधीरैः ॥ २४ ॥

पह् वन् चाटिथ् शशिकल् वुज़ूम्,
प्रकृथ् हुज़ूम् पवनसूतिय् ।
लोलकि नार-सूत्य् वालिञ्ज् बुज़ूम्,
शंकर् लबुम् तमिय् सांती ॥ २५ ॥

कामादिक काननषट्कमत-
च्छित्त्वामृतं बोधमयं मयाप्तम् ।
प्राणादिरोधात् प्रकृतिं च भक्त्या
मनश्च दग्ध्वा शिवधाम लब्धम् ॥ २५ ॥

चित्त् तुरुग् गगनि भ्रमवोन्,
निमेष अकि छ्यण्ड योजनलछ् ।
चैतन्यवगि यमि रटिथ् ज़ोन्,
प्राण् अपान् फुटरिथ् पख्च्य् ॥ २६ ॥

चित्ताभिधः सर्वगतिस्तुरङ्गः
क्षणान्तरे योजनलक्षगामी ।
धार्यो बुधेन्द्रेण विवेकवल्गा-
नोदेन वायुद्वयपक्षरोधात् ॥ २६ ॥

ख्यथ् गँडिथ् ना शमि मानस्,
भ्रान्त् यिमव् त्रावू तिम् गैय् ख्वसिथ् ।
शास्त्र् बूज़ु ज़ि यमभंग् कूरू,
सुद् ना पंचु तायू धन्या लूसिति ॥२७॥

खादनाद्भूषणाद्वापि मनो यस्य गतभ्रमम् ।
स मुक्तो नोत्तमर्णाद्यो गृह्णात्यर्थं हि सोऽनृणः ॥ २७ ॥

यव तूर् चलि तिम् अम्बर् ह्यति,
बुछ यव चालि तिय् आहार् अन् ।
चित्त नृप स्वविचारस् प्यत,
चिता देहस् वान् क्याह् वन् ॥ २८ ॥

शीतार्थं वसनं ग्राह्यं क्षुधार्थं भोजनं तथा ।
मनो विवेकितां नेयमलं भोगानुचिन्तनैः ॥ २८ ॥

सहज़स् शम् त दम् नो गछे,
इछि प्रावख् मुक्तिद्वार् ।
सलिलस् लवण् ज़न् मीलिथ् त गछि,
तोति छुय् दुर्लभ् सहज़-विचार् ॥ २९ ॥

स्वभावलब्धौ न शमोऽस्ति कारणं
तथा दमः किं तु परं विवेकः ।
नीरैकरूपं लवणं यथा भवेत्-
तथैकताप्तावपि नैष लभ्यः ॥ २९ ॥

लोभ् मारुनु सहज़् विचारुनु,
द्वगु ज़ानुन् कल्पन् त्राव् ।
निश छुय् त दूरु मव् ज़ानुनु,
शून्यस् शून्याह् मीलिथ् गोव् ॥ ३० ॥

लोभं त्यक्त्वा वैमनस्यं च तद्वत्-
कार्यो नित्यं स्वस्वभावावमर्शः ।
शून्याच्छून्यं नैव भिन्नं यथैवं
तस्मात्त्वं तद्भेदबुद्धिर्यथैव ॥ ३० ॥

मकुरस् ज़न् मल् च़लुम् मनस्,
अद् म्य लबूम् ज़नस् ज़ान् ।
सुह् ड्यलि डयूठुम् निश पानस्,
सोरुय् सुय् ताय् बूह् नत्र् कें ह् ॥ ३१ ॥

चित्तादर्शे निर्मलत्वं प्रयाते
प्रोद्भूता मे स्वे जने प्रत्यभिज्ञा ।
दृष्टो देवः स्वस्वरूपो मयासौ
नाहं न त्वं नैव चायं प्रपञ्चः ॥ ३१ ॥

कें ह् छिय् न्यन्द्र्यहति वुदिय्,
कें च़न् वुद्यन् न्यसर् प्यये ।
कें ह् छिय् स्नान् करिथ् अपूतिय्,
कें ह् छिय् ग्रह् बज़िथ् अक्रिय् ॥ ३२ ॥

काश्चित् प्रसुप्तोऽपि विबुद्ध एव
काश्चित् प्रबुद्धोऽपि च सुप्ततुल्यः ।
स्नातोऽपि काश्चिदशुचिर्मतो मे
भुक्त्वा स्त्रियं चाप्यपरः सुपूतः ॥ ३२ ॥

अकुय् ओंकार् युस् नाभि द्रे,
कम्बुय् ब्रह्माण्डस् सुम् गरे ।
अकुय् मन्त्र् युस् च़्यतस् करे,
तस् सास् मन्त्र् क्याह् जन् करे ॥३३॥

आ ब्रह्माण्डं नाभितो येन नित्य-
मोंकाराख्यो मन्त्र एको धृतोऽयम् ।
कृत्वा चित्तं तद्विमर्शैकसारं
किं तस्यान्यैर्मन्त्रवृन्दैर्विधेयम् ॥ ३३ ॥

संसारस् आयस् तपसे,
बोधप्रकाश् लबुम् सहज़्  ।
मर्यम् न कुँह् त मर न कँसि,
मर नेछ् त लस नेछ् ॥ ३४ ॥

आसाद्य संसारमहं वराकी
प्राप्ता विशुद्धं सहजं प्रबोधम् ।
म्रिये न कस्यापि न कोऽपि मे वा
मृतामृते मां प्रति तुल्यरूपे ॥ ३४ ॥

द्वादशान्त-मण्डल् यस् देवस् थज़्य् ,
नासिक पवन् अनाहत् रव् ।
स यस् कल्पन् अन्तिह् च्चेज़्य्,
पानय् देव् त अर्चुन् कस् ॥ ३५ ॥

यो द्वादशान्ते स्वयमेव कल्पिते
सदोदिते देवगृहे स्वयं स्थितः ।
संप्रेरयन् प्राणरविं स शंकरो
यस्यात्मभूतः स कमर्चयेद् बुधः ॥ ३५ ॥

प्रथय् तीर्थन् गछान् संन्यासि,
ग्वारांनि सुदर्शन मिलु ।
च्चित्ता परिथ् मव् निष्पत् आस्,
देशख् दूर्या द्रमन् नीलिय् ॥ ३६ ॥

यत्नेन मोक्षैकधियः सदामी
संन्यासिनस्तीर्थवरान् प्रयान्ति ।
चित्तैकसाध्यो न स लभ्यते तै-
र्दूर्वास्थलं भात्यतिनीलमारात् ॥ ३६ ॥

पवन् पूरिथ् युस् आनि वगे,
तस् बुन स्पार्शि न बुछ त त्रेश् ।
तिह् यस् करुन् अन्तिह् तगे,
सुह् संसारस् ज़्ययि न नेछ् ॥ ३७ ॥

यः पूरकेण चित्तं स्वं रोधयेत्क्षुत्तृडादिकम् ।
न पीडयति संसारे सफलं चास्य जीवितम् ॥ ३७ ॥

जल् थमुनु हुतवह् तुरनावुन् ,
ऊर्ध्व-गमन् परिवर्जिथ् चर्यथ् ।
काठधेनि द्वद् श्रमावुन्,
अन्तिह् सकलु कपट-चर्यथ् ॥ ३८ ॥

नीरस्तम्भो वह्निशैत्यं तथैव
पादैस्तद्व्योमयानमशक्यम् ।
दोहो धेनोः काष्ठमय्यास्तथैव
सर्वं चैतज्जृम्भितं कैतवस्य ॥ ३८ ॥

कुसु पुशु तांय् क्वस्स पुशांञी,
कम् कुसम् लांगिज़्यस् पूज़े ।
कमि सर गंडु दिज़्यस् जलधांनी,
कवसन मंत्र शंकर् वुज़े ॥ ३९ ॥

कः पौष्पिकः कापि च तस्य पत्नी
पुष्पैश्च कैर्देववरस्य पूजा ।
कार्या तथा किं गडुकं विधेयं
मंत्रश्च कस्तत्र वद प्रयोज्यः ॥ ३९ ॥

मन् पुशु तांय् यछ् पुशाञ्नी,
भावॖकि कुसम् लागिज़्यस् पूज़े ।
शशि-रस गडु दिज़्यस् ज़लधानी,
छ्वपि मंत्र शंकर् वुज़े ॥ ४० ॥

इच्छामनोभ्यां ननु पौष्पिकाभ्या-
मादाय पुष्पं दृढभावनाख्यम् ।
स्वानन्दपूरैर्गडुकं च दत्त्वा
मौनाख्यमंत्रेण समर्चयेशम् ॥ ४० ॥

आयस् कमि दिशि त कमि वते,
गछ् कमि वति कव ज़ान वथ् ।
अन्तॖहि दाय् लागि तते,
छ्यम् छनिस् फ्वकस् कस सथ् ॥ ४१ ॥

कया दिशा केन पथागताहं
पश्चाद्गमिष्यामि पथाऽथ केन ।
इत्थं गतिं वेद्मि निजां न तस्मात्
उच्छ्वासमात्रेण धृतिं भजामि ॥ ४१ ॥

गगन् च्वय् भूतल् च्वय् ,
च्वय् द्यन् पवन् त राथ् ।
अर्घ् चन्दुन् पोष् पॉञि च्वय्,
च्वय् छुख् सोरुय् त लॉगिजिय् क्याह् ॥ ४२ ॥

आकाशो भूर्वायुरापोऽनिलश्च
रात्रिश्चाहश्चेति सर्वं त्वमेव ।
तत्कार्यत्वात्पुष्पमर्घादि च त्वं
त्वत्पूजार्थं नैव किंचिल्लभेऽहम् ॥४२॥

यॅमि लोभ् त मन्मथ् मोरु,
तिमय् मॉरिथ् त लोगुनु दास् ।
यॅमियू सहज ईश्वर ग्वोरु,
तॅमिय् सोरुय् व्यन्दुन् स्वास् ॥ ४३ ॥

कामो लोभोऽहंकृतिश्चैव येन
यत्नात्पूर्वं मारिता मार्गचौराः ।
तेनैवैकेनैश्वरं धाम लब्ध्वा
सर्वं त्यक्त्वा भस्मवद्भावजातम् ॥ ४३ ॥

पानस् लागिथ् रूदुख् म्य च्रह्,
म्य च्यह् ल्राडान् लूस्तुमु द्रह् ।
ज्ञानस् मन्ज़् य्यालि ड्यूठुख् म्य च्रह्,
म्य च्य-त पानस् दितुम् .ह्रह् ॥ ४४

देहादिषट्कोशपिधानतस्त्वा-
मप्राप्य खिन्नास्मि चिरं महेश ।
उपाधिनिर्मुक्तविबोधरूपं
ज्ञात्वाद्य विश्रान्तिमुपागता त्वाम् ॥ ४४ ॥

कुश् पोष् तिल् दीफ् ज़ल् ना गछ़े,
युस् सद्भाव ग्वरकथ् मनि ह्यये ।
शम्भुस् स्वरि पनॅन्स यछ़े,
सय् द्रूपिज़े सहज़ा क्रिय ॥ ४५ ॥

पुष्पादिकं द्रव्यमिदं न तस्य
पूजासु सर्वमुपयोगि किंचित् ।
गुरूपदेशाद् दृढया च भक्त्या
स्मृत्यार्च्यते येन विशुद्ध आत्मा ॥४५॥

असे प्वन्दे ज़्वसे ज़ामे,
न्यथंय् तीर्थन् स्नान् करे ।
वंहरि-वहरस् नंनुय् आसे,
निश छुय् त पज़ानृतन् ॥४६॥

स्नातं हसन्तं विविधं विधेयं
कुर्वन्तमेतत्पुर एव सन्तम् ।
पश्यात्मदेवं निजदेह एव
कृतं प्रदेशान्तरमार्गणेन ॥४६॥

यथ् सरि सर्षप-फलु ना व्यत्ते,
तथ् सरि सकलो पांञि च्यन् ।
मृग् स्ृगाल् गंण्ड ज़लहस्ती,
ज़्यन् ना ज़्यन् त तंतुय् प्यन् ॥४७॥

सरोवरे यत्र न सर्षपस्य
कणोऽपि मात्येव विचित्रमेतत् ।
विवर्धते तत्पयसा समस्तं
यावत्प्रमाणं खलु देहिजातम् ॥ ४७ ॥

लल्लु व्वह् लूछ़्स् छ़ाडान् त ग्वारान्,
हल् म्य करूमस् रसानि शतिय् ।
वुछुन् ह्यतुमस् तारि डीठिमस् वरन्,
म्य ति कल् गनेय ज़ि ज़ागुमस् ततिय् ॥

द्रष्टुं विभुं तीर्थवरान्गताहं
श्रान्ता स्थिता तद्गुणकीर्तनेषु ।
ततोऽपि खिन्नास्मि च मानसेन
स्वान्तर्निविष्टा खलु तद्विमर्शे ॥ ४८ ॥

मल् व्वन्दि ज़ोलुम् ,
जिगर् मोरुम् ।
त्यलि लल्लु नाव् द्राम् ,
य्यलि दलि त्रांविमस् ततिय् ॥ ४९ ॥

ततोऽत्र दृष्ट्वावरणानि भूया
ज्ञातं मयात्रैव भविष्यनीति ।
भङ्क्त्वा यदा तानि च संप्रविष्टा
लल्लेति लोके प्रथिता तदाहम् ॥ ४६ ॥

त्रयि न्यँगि सराह् सरिय् सरस्,
आकि न्यँगि सरस् अर्शस् जाय् ।
हर-मुख कौँसर अख् सुम् सरस्
सति न्यँगि सरस् शून्याकार् ॥ ५० ॥

वारत्रयं नीरमयं स्मरामि
तथैकदाहमवकाशहीनम् ।
आकाशमन्यांन्यपि चाद्भुतानि
स्मरामि शून्यं खलु सप्तवारम् ॥ ५० ॥

ज़नञ ज़ायेय् रति ताय् क्रतिय्,
करिथ् उदरस् बहु क्लेशा ।
फीरिथ् द्वार् भज़नि वाति तंतुय्
शिव् छुय् क्रूठ्-ताय् च़ेन् उपदेश् ॥५१॥

प्रसूदरं क्लेशयुतं विनीय
जातो मलाक्तोऽप्यनुयाति सन्ततम्।
यत्प्रेरितः सौख्यधिया नरः स्त्रीं
कष्टेन लभ्यं शृणु तं गुरोः शिवम् ॥ ५१ ॥

स्वय् शिला छय् पटस् त पीठस्,
स्वय् शिला छय् उत्तम-देश्।
स्वय् शिला छय् फेरवंनिस् ग्रटस्,
शिव् छुय् क्रूठ् तांय् च्रेन् उपदेश् ॥५२॥

यथा शिलैकैव स्वजातिभेदात्
पीठादिनानाविधरूपभागिनी।
तथैव योऽनन्ततया विभाति
कष्टेन लभ्यं शृणु तं गुरोः शिवम् ॥ ५२ ॥

रव मत थालि थालि तापितन्,
तापितन् उत्तम देशा।
वरुण् मत लोट गर अंच्रितन्,
शिव् छुय् क्रूठ्-तांय् च्रेन् उपदेश् ॥ ५३ ॥

स्थले स्थले स्वैः किरणैर्यथा रविः
पतत्यभेदेन गृहेषु वाञ्छियम् ।
जलं तथा सर्वजगद्गृहेषु
कष्टेन लभ्यं शृणु तं गुरोः शिवम् ॥ ५३ ॥

सय् मातारूपि पय् दियेे,
सय् भार्या-रूपि करि विलास् ।
सय् माया-रूपि जीव् हरे,
शिव् छुय् क्रूठ् तांय् च़ेन् उपदेश् ॥५४॥

मातृस्वरूपेण पयःप्रदा नु
भार्यास्वरूपेण विलासकारिणी ।
यच्छक्तिरन्ते मृतिरूपमेति च
कष्टेन लभ्यं शृणु तं गुरोः शिवम् ॥५४॥

कन्यव् गृह् त्यजि कन्यव् वनवास् ,
यिथुय् छुख् त तिथुय् आस् ।
मनस् धैर्य् रट् सॉपज़ख् सुवास्,
क्या छुय् मलुन् सूर् तांय् सास् ॥५५॥

गृहे निवासो न विमोक्षहेतु-
वनेऽथ वा योगिवरैः प्रदिष्टः ।
दिवानिशं स्वात्मविमर्शनाढ्यो
यथास्थितस्त्वं परमोऽस्त्युपायः ॥ ५५ ॥

ये ग्वरा परमो ग्वरा,
सद्भाव् भाव् त म्य च़्हह् ।
ज़ह् ज़ानि उपनेय् कन्दापुरा,
हूह् कव तूरुनु त हाह् कव तंतु ॥ ५६ ॥

गुरो ममैतमुपदेशमेकं
कुरुष्व बोधाप्तिकरं दयातः ।
हाह्-हूह् इमौ स्तः सममास्यजाता-
वुष्णोऽस्ति हाह् किमथ हूह् सुशीतः ॥ ५६ ॥

नाभिस्थानस् च़ित् ज़लवंञ़ी,
ब्रह्मस्थानस् शिशिरुनु मुख् ।
ब्रह्माण्डस् छ्यय् नद् वहवंञ़ी,
तवय् तूरुनु हूह् हाह् गौव् तंतु ॥५७॥

नाभ्युत्थितो हाह् जठराग्नितप्तो
हूह् द्वादशान्ताच्छिशिरात्समुत्थः ।
हाह् प्राणभूतोऽस्त्यथ हूह् अपानः
सिद्धान्त एवं मुनिभिः प्रदिष्टः ॥ ५७ ॥

यिह् यिह् कर सुय् अर्चुन्,
यिह् रसंञि उच्चर्यम तिय् मन्थुर् ।
इय् यिथ लग्यम् देहस् परिच्चय्,
सुय् परमशिवुन् तन्थुर् ॥ ५८ ॥

करोमि यत्कर्म तदेव पूजा
वदामि यच्चापि तदेव मंत्रः ।
यदेव चायाति तथैव योगाद्-
द्रव्यं तदेवास्ति ममात्र तन्त्रम् ॥ ५८ ॥

व्यूह् ना ब्वह् ना ध्येय् ना ध्यान्,
गौव् पानय् सर्वक्रिय् मशिथ् ।
अन्या ड्यूठुख् केंह् ना अनुय्,
गय् सत् लय पर् पशिथ् ॥ ५९ ॥

नाहं न च त्वं न च कापि चर्चा
ध्यानस्य योग्यात्र पदेऽतिशान्ते ।
कोऽप्यन्वयश्चात्र न भाति तस्मात्
विस्मार्य लीनं स्वमिवात्र सद्भिः ॥ ५९ ॥

छ्राडान् लूछ्रुस् पानिय् पानस्,
छ्रयापिथ् ज्ञानस् वोतु न कूँछ्र् ।
लय् कर्हूमस् वाचूस् मय्-खानस्,
बँरि बँरि बान त च्यवान् न कुँह् ॥६०॥

स्वात्मान्वेषणयत्नमात्रनिरता श्रान्ता ततोऽहं स्थिता
तज्ज्ञानैकमहापदेऽतिविजने प्राणादिरोधात्ततः ।
लब्ध्वानन्दसुरागृहं च तदनु दृष्ट्वात्र भाण्डान्यलं
पूर्णान्येव तथापि तत्र विमुखः प्राप्तो जनः शोचितः
॥ ६० ॥

श्रीलल्लायोगिनीवाक्यजातं षष्ट्या मया स्फुटम् ।
श्लोकानां भास्करेणेह दृब्धमस्तु शिवार्पणम् ॥ १ ॥

इति लल्लेश्वरी वाक्यानि राजानकभास्करकृतार्थ-
च्छायापद्योपेतानि समाप्तानि ॥

Printed by P. Vishi Nath and Sons, Photographers Srinagar No. 1279A.